# मानाक्षी पंचरत्नम्

उद्यद्भानु सहस्रकोटि सदृशां केयूर हारोज्ज्वलां
बिंबोष्ठीं स्मित दंत पंक्ति रुचिरां पीतांबर अलंकृताम् ।
विष्णु ब्रह्म सुरेंद्र सेवित पदां तत्त्व स्वरूपां शिवां
मीनाक्षीं प्रणतोऽस्मि संततं अहं कारुण्यवारां निधिम् ॥ 1 ॥

मुक्ताहार लसत्किरीट रुचिरां पूर्णेंदु वक्त्रप्रभां
सिंजनूपुर किंकिणी मणिधरां पद्मप्रभा भासुराम् ।
सर्व अभीष्ट फलप्रदां गिरिसुतां वाणी रमा सेवितां
मीनाक्षीं प्रणतोऽस्मि संततं अहं कारुण्यवारां निधिम् ॥ 2 ॥

श्रीविद्यां शिव वामभागनिलयां ह्रींकार मंत्रोज्ज्वलां
श्रीचक्रांकित बिंदु मध्य वसतिं श्रीमत् सभानायकीम् ।
श्रीमत् षण्मुख विघ्नराज जननीं श्रीमत् जगन्मोहिनीं
मीनाक्षीं प्रणतोऽस्मि संततं अहं कारुण्यवारां निधिम् ॥ 3 ॥

श्रीमत् सुंदरनायकीं भयहरां ज्ञानप्रदां निर्मलां
श्यामाभां कमलासनार्चि तपदां नारायणस्य अनुजाम् ।
वीणा वेणु मृदंग वाद्य रसिकां नाविधां अंबिकाम्
मीनाक्षीं प्रणतोऽस्मि संततं अहं कारुण्यवारां निधिम् ॥ 4 ॥

नानायोगी मुनींद्र हृत्सु वसति नानार्थ सिद्धप्रदां
नाना पुष्प विराजितांघ्र युगलां नारायणेन अर्चिताम् ।
नाद ब्रह्ममयीं परात्परतरां नानार्थ तत्त्वात्मिकां
मीनाक्षीं प्रणतोऽस्मि संततं अहं कारुण्यवारां निधिम् ॥ 5 ॥